# मैत्रायणीय शुल्ब सूत्र

अथ मैत्रायणीयशुल्बसूत्रम्

अथ प्रथमः खराडः

आहवनीयं यजमानमात्रदीर्घचतुरस्रं विहृत्य तावतीं रज्जुमभ्यस्य मध्ये लक्षणं कृत्वा दक्षिणयोः श्रोरयंसयोरन्तौ नियम्य लक्षणेन दक्षिणानायम्य निमित्तका-रातिनिमित्ते रज्जुं नियम्यान्तौ समस्य दक्षिणायाः श्रोणेर्दक्षिणमंसमनुलिखेदेव-मेवोत्तरतस्तिर्यङ्मानीं द्विगुणां तथा कृत्वा पुरस्तात्पश्चाच्चोपलिखेत् १

अरत्निश्चतुरस्रस्तु पूर्वस्याग्नेः खरः स्मृतः<br>
रथचक्राकृतिः पश्चाच्चन्द्रार्द्ध इव दक्षिणः २

मराडले परिलेखः स्याद्यवोनानि चतुर्दश<br>
परिलेखार्द्धचन्द्रे स्यात्सार्द्धा ह्येकोनविंशतिः ३

सिकतानां खरं कुर्यादग्नेरायतनं हि तत्<br>
उद्धतावोक्षतं कृत्वा स्फ्येन कुर्वीत लक्षणम् ४

खरप्रमाणा रेखाः षड् उदीची प्रथमा भवेत्<br>
पञ्च प्राच्यस्ततो रेखा दक्षिणे चोत्तरे पृथक् ५

तयोर्मध्ये पुनश्चान्ये तयोर्मध्ये तु पञ्चमी<br>
रेखाणामनुपूर्वेण देवताः सम्प्रकीर्तिताः ६

पृथिव्यग्निश्च वायुश्च सोमश्चेन्द्रः प्रजापतिः<br>
लक्षणे तु कृते तस्मिन्नग्नेः प्रणयनं भवेत् ७

अणीयस्याश्चतुर्हस्तां रज्जुं मित्वा त्रिधा भजेत्<br>
मध्यं चतुर्द्धा संभुज्य मध्यमं लक्षणं भवेत्<br>
पूर्वात् त्रिभागात्पश्चार्द्धे तुर्ये दद्याच्च लक्षणम् ८

सौरय्यविहिता वेदिः शुल्बविज्ञानसंमिता ९

दार्शिकी षट्शया तुर्ये सप्त सप्तदशैव तत्<br>
एकं द्वौ पञ्च तैर्मित्वा समरैः परिलेखयेत् १०

पाशात्पाशस्तु प्राच्यर्द्धे मध्ये दद्याच्च लक्षणम्
मध्यात्तुरीये निरायामो विस्तारस्त्वर्धतो भवेत् ११
प्राच्यर्द्धे लक्षणं दद्याच्चतुर्भागे निरञ्चनम्
ततोऽपरस्मिन् शङ्क्वर्थे दद्यात्पञ्चकसप्तके १२
ततोऽपरस्मिन् शङ्क्वर्थे रज्जुश्च द्विगुणा भवेत् १३
नवशया पाशाभ्यामर्द्धतृतीययोर्लक्षणे द्विशयेऽपरस्मात्पूर्वस्मादध्यर्द्धे षट्सु
पाशं प्रतिमुच्यापरस्मादर्द्धतृतीये गृहीत्वा दक्षिणा निरायम्य द्वयोः शङ्कुं
निहन्यादेवमेवोत्तरतः पूर्वस्मादर्द्धतृतीये गृहीत्वा दक्षिणा निरायम्याध्यर्द्धे शङ्कुं
निहन्यादेवमेवोत्तरतः १४
द्विगुणे लक्षणं दद्याद्दद्याच्चैव चतुर्गुणे
मूलाच्च त्रिगुणे दद्यात्पञ्चाङ्गी प्रोच्यते हि सा
परितनोति शयैका च द्विपाशोत्तरवेदिकी १५
मध्ये तु लक्षणं दद्यादुभयोश्चान्तमध्ययोः १६
द्विशयेऽर्द्धशयेऽर्द्धचतुर्थशये शयार्द्धे शय एव च
अध्यर्द्धशयेन पातितया पाशुकी वेदिरुच्यते १७
पाशादर्द्धशयेभ्यः पञ्चनितोदाः शयाश्च षट् प्राची
त्रिशये च भवेत्पाशः पाशुकी वेदिरुच्यते १८
त्रिगुणाया रज्जोः पाशं कृत्वा पाशादूर्ध्वं नवशयं मित्वा
पाशुक्युत्तरवेदिर्व्याख्याता १९
वरुणप्रघासेषूत्तराया अर्द्धं प्रतिप्रस्थाता करोति तिर्यक्समां प्राचीम् २०
शया रज्जोर्विधातव्याः षट्भागोनास्त्रयोदश
मारुतीं वारुणीं चैव सह वेदिं मिमीषता २१
पाशाद् द्वयोः शये तस्माद्द्वयोरन्यत्ततः शये
पूर्वात्पाशाच्छयेऽध्यर्द्धे ततोऽन्यत्पादहीनयोः २२
ततोऽध्यर्द्धे ततः पादे क्लृप्ते मारुती वारुणी २३
पुरुषे स्यान्निरायामः प्राच्यर्द्धषष्ठवर्जितः

ततः सषष्ठार्द्धोऽसः स्याद् दिक्कुष्ठा पैतृकी स्मृता २४
रज्जुः शयार्द्धषष्ठा सा साङ्गुला तनुयाज्ञिकी
चतुर्षु षडङ्गुलोनेषु सार्द्धे च शये सपादेऽन्यत् २५
षडङ्गुलोनाश्चत्वारः प्राची पश्चात् शयत्रया
पूर्वार्द्धेऽर्द्धतृतीया स्यात्सा वेदिः पाकयाज्ञिकी २६
द्विगुणा शतसाहस्त्रे कोटयां पञ्चगुणा भवेत् २७
खण्डमण्डलयोश्चैव त्रिभागमवशेषयन्
धिष्ण्यं तत्र प्रकुर्वीत यवोनानि चतुर्दश २८
अपि च--सत्र्यङ्गुलं शयं मित्वा सर्वतः परिलेखयेत् २९
द्विगुणं तु पुनर्मध्ये उत्तरं च चतुर्गुणम्
कुर्यादौपासनीयस्य पाकयज्ञविधिषु च ३०
त्वचोबिलं दारुमयं मूलतोऽभ्रिमयूखकम्
स्यात्तिर्यगीषामात्रो मयूखः प्रादेशमात्रो वा ३१
ऋजवः शङ्कवः कार्याः खादिरा वैणवा अपि
द्वादशाङ्गुलपर्यन्ता द्व्यङ्गुलं परिणाहजाः ३२
यूपमूलं रज्ज्वा परिगृह्य चतुर्द्धा संभुज्य रराटे प्रतिमुच्य सर्वतोऽनुलिखेत् ३३
पदं पञ्चदशाङ्गुलं यावत्पदं वा ३४
शयश्चतुर्विंशत्यङ्गुलः प्रोक्तः पञ्चविंशस्यङ्गुलो वा । प्रादेशे द्वादशाङ्गुलः ३५
अध्वर्योः परिमाणानि अधिकारात् । दारुकारस्यैके । यजमानस्य वा
स्वामित्वात् ३६
द्विपदः प्रक्रमस्त्रिपदोऽर्द्धत्रिपदो वा पञ्चपदस्त्वेव साग्निकः ३७

## अथ द्वितीयः खण्डः

पृष्ठ्याशङ्कौ पाशं प्रतिमुच्य प्राचीमायम्य पञ्चदशसु लक्षणं ततस्त्वेकविंशत्यां
ततस्द्विषु ततस्त्रिषु ततो द्वादशसु पाशं करोति । तत् षट्त्रिंशे
प्रतिमुच्यापरस्मात्ततः पञ्चदशसु गृहीत्वा दक्षिणा निरायम्य पञ्चदशसु शङ्कुं

निहन्यादेवमेवोत्तरतः । पूर्वस्मात्पञ्चदशसु गृहीत्वा दक्षिणा निरायम्य
द्वादशसु शङ्कुं निहन्यादेवमेवोत्तरतः । परितस्तनोति १
प्रमाय रज्जुं दशभीरथाक्षैरेकादशैश्चोपरबुध्नमात्रैः
तस्याश्चतुर्विंशतिभागधेयमेकादशिनीं प्रतिवेदिमाहुः २
चत्वारिंशतिरष्टौ च अङ्गुलानि समासतः
एकादशिन्या मानेऽस्मिन् प्रक्रमं कवयो विदुः ३
अङ्गुलानि प्रमायाष्टौ वेद्यग्रादर्द्धमुल्लिखेत् ४
तं प्राञ्चं प्रसमीक्षेत एतां विद्याच्छिखण्डिनीम् ५
एतेनैव तुल्येन इन्द्रवज्रशिखण्डिनीम् ६
एकादशसु कर्तव्या बुध्ना वेदिप्रसिद्धये ७
संशयो यत्र जायेत अर्द्धं यूपावटे यदि
अग्निष्ठेन तु ते सर्वे अवरुद्धा भवन्ति ते ८
प्रक्रमेण समं मित्वा चतुरस्रं तु मण्डलम्
कुर्यात्सकलेनार्द्धेन भ्रामयित्वाऽस्य मध्यतः ९
मित्वा तदक्ष्णयारज्ज्वा ततः कुर्यात्तु मण्डलम्
पुनस्तदक्ष्णया-रज्ज्वा हृत्वाऽर्द्धमतिरेकतः १०
प्रक्रमार्थं तु तां कुर्याद्विद्यामश्वमखस्य च ११
अनेनैव विधानेन पञ्चधा दशधाऽक्ष्णया
वेदी क्रमेण ते स्यातां पौरुषी सार्वमेधिनी १२
त्रिपदा पार्श्वमानी स्यात्तिर्यङ्मानी पदं भवेत्
तस्याक्ष्णया तु या रज्जुः कुर्याद्दशपदा हि सा १३

अथ तृतीयः खण्डः

अष्टादशारत्नीमुभयतःपाशां कृत्वा मध्ये लक्षणम् । ततस्तयोरर्द्धयोरपरमन्तं यथाप्रविष्टं पञ्चाङ्गीकृत्वा प्राचीमायम्य यथाप्रदिष्टं लक्षणासु शङ्कून् निहन्यात् । उन्मुच्याभितो मध्यमे पाशौ प्रतिमुच्य दक्षिणा निरायम्य तोदं करोति ।

उन्मुच्याभितो मध्ये पाशं प्रतिमुच्य दक्षिणा निरायम्य तोदस्याध्यधि-
हृत्यार्द्धचतुर्दशसु शङ्कुं निहन्यात् । मध्यमात्पाशमुन्मुच्य पूर्वार्द्धे प्रतिमुच्य
दक्षिणार्द्धे तु दक्षिणां प्राचीं समायम्यार्द्धपञ्चमेषु शङ्कुं निहन्यात् । पूर्वार्द्धा-
त्पाशमुन्मुच्य पश्चार्द्धे प्रतिमुच्य दक्षिणार्द्धे तु दक्षिणां प्राचीमायम्यार्द्धपञ्चमेषु
शङ्कुं निहन्यात् । एवमेवोत्तरतः । परितस्तनोति । सदो व्याख्यास्यामः
१
सदो मध्यमरेखा या दक्षिणोदीची निरायत्ता तस्याः प्राचीं वसुत्रिंशत्त्यक्त्वा
धिष्ण्यानि कारयेत् २
अष्टाविंशाङ्गुला धिष्ण्या द्वाचत्वारिंशाङ्गुलान्तराः ३
अंसादुत्तरतोऽध्यर्द्धे शङ्कुः श्रोण्याश्च दक्षिणे
आग्नीध्रे सा भवेत्प्राची तयोर्मध्ये तु सङ्गमम् ४
आग्नीध्रं षट्शयं भवेत् ५
प्राग्वंशं दशहस्तं स्यात् ६
पत्नीशालं चतुःशयम् ७
सर्वा विंशशया रज्जुः शये दद्याच्च लक्षणम्
पाशाच्च पञ्चके दद्यात्पाशादर्द्धाष्टमेषु च ८
शयपञ्चमयोर्मध्ये उपस्तम्भनलक्षणम्
ततस्त्वेकविंशत्यां मण्डलेष्वेव लक्षणैः ९
अङ्गुलिषु पुनर्मित्वा द्वादशस्वेव शुल्बवित्
प्रज्ञाते लक्षणे दद्यादुपस्तम्भनलक्षणात् १०
पूर्वात्पाशाद्बाहौ ततोऽन्यः पञ्चदशसु ततोऽन्योऽष्टास्वङ्गुलीषु पूर्ववद् द्वादशसु
चतुर्विंशतिसु चान्यत् ११
एक एव शये शङ्कुः शिष्टाः पञ्चदशादिषु १२
खरोपरवोपस्तम्भनमेथीष्टाद्वार्युपद्वार्याः प्रसिद्ध्यर्थम् १३
द्वार्या विस्तारयोर्मध्ये बाहुर्देयस्तु लक्षणम् १४
एतेनैव तु कल्पेन प्रतीचीमेव हारयेत् १५

प्रथमत्रयपञ्चमसार्द्धसप्तमेषु रज्जुमुत्तरतो हरेत् १६
एतदेव विपर्यस्तं खरः स्याद्वाजपेयिकः १७

अथ चतुर्थः खराडः

चतुरस्त्रं मुद्गरं कुर्यात् षोडशाङ्गुलमायतम्
अमध्यविद्धं रमणीयं सारदारुविनिर्मितम् १
मौञ्जं शुल्बं सदा कार्यं शाणेन परिमिश्रितम्
मन्वादयो वदन्त्येवं मिश्रितं कुशबल्वजैः २
अजीर्णा ग्रन्थिनी सूक्ष्मा समाश्लक्ष्णा ह्यरोमशा
रज्जुर्मानाधिका कार्या अध्वरे योगमिच्छता ३
यथा न क्षीयते मात्रा यथा च न विवर्द्धते
यथा च रमते दृष्टिस्तथा योगं समाचरेत् ४
तन्तू पुष्करनालस्य त्रिगुणं यद् दृढं भवेत्
त्रिहायन्या वत्सतर्या बालेन सममुच्यते ५
त्रिबालं सर्षपं विद्याद्यवं विद्यात्त्रिसर्षपम्
त्रियवं कृष्णलं विद्यात्मानं विद्यात्त्रिकृष्णलम् ६
कृष्णलानां चतुःषष्टिः सौवर्णो मान उच्यते
मानस्त्वेकोनपञ्चाशन्निष्क इत्यभिधीयते ७
हरीतक्याकृतिर्निष्को रुक्मस्तु परिमराडलः ८
त्रीणि निष्कसहस्राणि त्रीणि निष्कशतानि च
अष्टाविंशं शतं चैव दद्याद् बहुसुवर्णके ९
पुरुषोऽङ्गुलिमानेन भवेद् विंशशताङ्गुलः
ऊर्ध्वबाहुरूर्ध्वपाणिः प्रपदाभ्यां प्रतिष्ठितः १०
अथ चेत्प्रपदोत्थानः पञ्चमोंऽशः शयो भवेत् ११
अङ्गुल्यास्तु प्रमाणं स्यात् षडयवाः पार्श्वसंहिताः १२
अरोगश्चाविपीवा च ह्यम्बुसिक्तस्तु यो यवः १३

तस्मादङ्गुलिभिः कार्यं प्रमाणं सर्वकर्मसु १४
मण्डलेन च कीलेन दिगादिग्रहणं स्मृतम् १५

इति मैत्रायणीय शुल्बसूत्रं सम्पूर्णम्

Reference:
Damodhar Jha, *Maitrāyaṇīya-Śulbasūtram with the Commentary of Moḍhamaitra-bhaṭṭa-Śankara,* (Smt. Priyamvada Jha: Hoshiarpur, 2001).